


वाराणसेयसंस्कृतविश्वविद्यालय-

# दर्शनपरिषदधिवेशने

विविधदर्शनेषु

समागतानां निबन्धानां संक्षेपाः

( २३।१२—२६।१२।६७ )

# उद्देश्यानि

१. सामाजिकजीवनोपजीव्यदार्शनिकतत्त्वानामाकलनमुन्नयनञ्च ।

२. दर्शनविशेषे प्रौढिसम्पादनाय दर्शनान्तरप्रमेयपरिचयापादनम् ।

३. अर्वाचीन-प्राच्यप्रतीच्यदर्शनालोचनम् ।

४. दर्शनालोचनप्रसाराय विशिष्टाधिवेशनाद्यायोजनम् ।

# निवेदना

अथेह प्रस्तूयन्ते दर्शनपरिषदि समागतानां निबन्धानां संक्षेपाः। निबन्धसंक्षेपोपस्थापने परिषदां क्रमो नावश्यमनुसृत इति विज्ञेयम्। येषां निबन्धानां संक्षेपा लेखकैर्न प्रेषितास्तेषां संक्षेपा अस्माभिरेव कृता इति निवेद्यते—

मन्त्रिणा

## कार्य-क्रमः

२३-१२-६७

| | |
|---|---|
| उद्घाटनम् प्रधानसभा च<br>मध्याह्ने १-३० | अध्यक्षः काशीपीठाधीश्वर-शङ्कराचार्य-<br>स्वामिश्रीमहेश्वरानन्दसरस्वती |
| न्यायदर्शन-परिषद्<br>सायम् ३ | अध्यक्षः पण्डित-मधुसूदनभट्टाचार्यः<br>प्राध्यापकः, राजकीयसंस्कृतमहाविद्यालये, कलकत्ता । |

२४-१२-६७

| | |
|---|---|
| वेदान्तदर्शन-परिषद्<br>प्रातः १० | अध्यक्षः पण्डितराज-एस० सुब्रह्मण्यशास्त्री<br>प्राचार्यः, भारतीयविद्याभवने, बम्बई । |
| जैनदर्शन-परिषद्<br>अपराह्णे २ | अध्यक्षः श्रीसतीन्द्रचन्द्र-न्यायाचार्यः |

२५-१२-६७

| | |
|---|---|
| सन्तजीवनदर्शन-परिषद्<br>प्रातः १० | अध्यक्षः आचार्य—हजारीप्रसादद्विवेदी<br>हिन्दीविभागाध्यक्षः, चण्डीगढ़विश्वविद्यालयस्य । |
| प्राच्यप्रतीच्यदर्शन-समीक्षा-परिषद्<br>अपराह्णे २ | अध्यक्षः डा० चन्द्रधरशर्मा<br>अध्यक्षः, दर्शनविभागस्य, जबलपुरविश्वविद्यालये । |
| परिचर्यागोष्ठी<br>रात्रौ ७ | विषयः—नवीनदर्शनानामुद्भवः कथं<br>स्यात् ? |

२६-१२-६७

| | |
|---|---|
| बौद्धदर्शन-परिषद्<br>प्रातः १० | अध्यक्षः डा० धर्मेन्द्रनाथशास्त्री |
| विदुषां भाषणानि<br>अपराह्णे २ | विषयः—दर्शनशास्त्रेषु अनुसन्धानप्रयासः |
| सम्पन्नता-समारोहः<br>सायम् ४ | |

[ १ ]

## दर्शनेषु चित-तत्त्वव्यवस्था ( समीक्षा )

श्रीचक्रेश्वरभट्टाचार्यः,

उग्रतारापीठाध्यक्षः, गोहाटी

चित् खलु ज्ञानम्, प्रधानम् शक्तिः प्रकृतिः, माया, अविद्या, अव्यक्ता जडेत्यादिबहुभिर्नामभिरभिधीयते। शङ्कराचार्यमते चित् परमेशशक्तिरव्यक्तनाम्नी त्रिगुणात्मिका, अनिर्वचनीयस्वरूपा; इयमव्यक्ता तत्त्वान्यत्वनिरूपणस्य अशक्यत्वादिति। ब्रह्मणो मायाशक्तेः प्रकारभेदेन सामर्थ्यद्वयम्—आवरणं विक्षेपश्च। वेदान्तिभिरुच्यते यत् परब्रह्मणः शक्तिर्माया जडा चेति। तान्त्रिकैरुच्यते—जगदाकारेण चिच्छक्तिः परिणमते, अतएव चिन्मयं जगन्न जडमिति। शैवाद्वैतदर्शनसम्मतं शाक्ताद्वैतदर्शनसम्मतं च चितिशक्तिस्वरूपं निबन्धान्ते विवृतम्। तत्त्वशब्दस्यार्थश्च उपसंहाररूपेण उपदर्शितः।

[ २ ]

## सत्तात्रैविध्यम्

डा० सुब्रह्मण्यशास्त्री,

नागपुर-विश्वविद्यालयः, नागपुरम्

भगवत्पादशङ्करानुयायिनः सत्तायास्त्रैविध्यम् अङ्गीकुर्वन्ति—पारमार्थिकी, व्यावहारिकी, प्रातिभासिकी सत्ता चेति। एवंविधः सत्ताभेदो बौद्धनयेऽपि दृश्यते—संवृतिसत्यं परमार्थसत्यं चेति। अत्र शाङ्करसम्प्रदायाचार्याणां गौडपादविवरणकारादीनां मतानि प्रपञ्चितानि। बहुभिरुदाहरणैर्युक्तिभिश्च सत्ताभेदा व्याख्याताः। भ्रमज्ञानम्, मायास्वरूपम् इत्यादयो विषया अपि विशदीकृताः, अनिर्वचनीयतावादश्च विवृतः।

[ ३ ]

## निर्विशेषब्रह्मणि गौडीयवैष्णवसिद्धान्तः

राजेन्द्रदेवशर्मा,

राजकीयसंस्कृतमहाविद्यालयः, नवद्वीपम्

एकमेव परतत्त्वं साधकानामनुभवभेदेन बहुधा भासते, अत्र 'यथेन्द्रियैः पृथग्भावैः···' इति भागवतीयं वचः गौडीयाः प्रमाणरूपेण उपस्थापयन्ति। तदेकं परतत्त्वं न निर्विशेषं ब्रह्म,

न वा सर्वान्तर्यामी भगवदंशविशेषः परमात्मा आविष्कृतद्वयेकगुणशक्तिविशिष्टः, प्रत्युत निखिलगुणशक्तिविशिष्टः षडैश्वर्यपूर्णो भगवानेव परमं तत्त्वमिति । अस्य भगवत एव इच्छा-वशाद् अवताराः प्रजायन्ते, महदादिसृष्टिश्च पुरुषावतारादिति । ब्रह्म खलु अस्य भगवत एवासम्यक्प्रकाशस्वरूपम्, अतएव ब्रह्मानन्दाद् भगवत्सेवानन्दस्य परमाधिक्यं गौडीया अभ्युपगच्छन्ति । भगवान् खलु ब्रह्मणः प्रतिष्ठा, स खलु धर्मी, ब्रह्म पुनः धर्मभूतमिति । 'ब्रह्म-पुच्छं प्रतिष्ठे'ति श्रुतावपि ध्वन्यते यद् निर्विशेषं ब्रह्म न चरमाश्रयभूतमिति । ब्रह्मण आश्रय-भूतः श्रीकृष्णो भगवानेवेति ।

[४]

## आगमिक ईश्वराद्वयवाद तथा शाङ्कर अद्वैतवाद या ब्रह्मवाद

श्री राममूर्ति त्रिपाठी

अध्यक्ष, स्नातकोत्तर हिन्दी विभाग, विक्रम विश्वविद्यालय, उज्जैन

अद्वय ( आगमसंमत ) और अद्वैत ( शंकराचार्यसंमत ) का पार्थक्यविचार इस लेख का विषय है। इन दोनों परम्पराओं में ये दो शब्द समान रूप से प्रचलित रहे हैं, पर आगमानुसार इन दोनों का अर्थ है—दो का नित्य सामरस्य और शंकरानुसार अर्थ है—द्वैतों या भेदों का अभाव । दोनों मतों में 'शक्ति' स्वीकृत हुई है पर 'शक्ति का स्वरूप' और 'शक्ति एवं शक्तिमान् का सम्बन्ध' इन दो विषयों में दोनों परम्पराओं की दृष्टि अत्यन्त विलक्षण है । इन दोनों प्रस्थानों की मूलभूत दृष्टियों में भी विलक्षणता दृष्ट होती है, यथा—शंकराद्वैतमार्ग में केवल ज्ञान का प्राधान्य है पर आगममार्ग में ज्ञान और भक्ति का सामञ्जस्य स्वीकृत हुआ है। कर्तृत्व आदि धर्म शिव से नित्य सम्बद्ध हैं—ऐसा आगमी मानते हैं, शंकरीय दृष्टि में ये धर्म औपाधिक हैं।

[५]

## पुष्टिभक्तिः

पं० सबलकिशोरः,

माथुरचातुर्वेदविद्यालयः, मथुरा

पुष्टिभक्तिमार्गो वल्लभाचार्येण प्रवर्तितः । शब्दोऽयं सरलसाधनोपदेशक-महापुरुषनिष्ठां भगवदनुग्रहप्रयुक्तां जीवविषयिकां कृपाम् बोधयति । 'पोषणं तदनुग्रहः' इति भागवतपद्ये

मतमिदं लक्षितम् । पुष्टिभक्तियुतो भक्तः मोक्षमपि नाद्रियते । भक्तिरियं प्रेमप्रधाना । अव्यभिचारिविगाढभावप्रधाना भगवद्वशीकारसमर्था भगवत्सेवा भक्तिरित्युच्यते । इयं प्रेमसेवा रसरूपैव । सा च स्नेहानुरक्तिप्रभृतिशब्दवाच्या । आलम्बनभेदेन स्नेह एव परिपुष्टः शृङ्गारादिसंज्ञां लभते । पुष्टिभक्तिमार्गावलम्बिनां सर्वेऽप्याचारा भगवत्स्मरणपूर्वका भगवदुद्देश्यका भगवद्भावभाविताश्च भवन्ति इति ।

[ ६ ]

## भारतीयदर्शनानां तापत्रयप्रशामकत्वम्

चन्द्रदेव त्रिपाठी,

राजसंस्कृतोच्चविद्यालयः, बेतिया, चम्पारण्यम्

तापो दुःखं, तच्च आध्यात्मिकादिभेदेन त्रिविधमिति पूर्वाचार्याः । तेषां प्रशमः सर्वैरेव काम्यते, अतः वेदान्तयोगादिषु दर्शनेषु तापानां प्रशान्तिः कथं भवेदिति चिन्तितमुपायाश्च स्पष्टमुपवर्णिताः । लौकिकोपायानामस्मिन् कर्मणि व्यर्थता दृश्यते, परमार्थसिद्धावेव दुःखत्रयात्यन्तनिवृत्तिर्भवेदिति शिष्टानां नयः । परमार्थसिद्धये मनोवाक्कायशुद्धिरपेक्ष्यते; मनोजय एव परमार्थसिद्धेर्मुख्यो हेतुः, स च योगाभ्यासाधीनः । मनोनिरोधाय सत्सङ्गादीनि साधनानि अनुष्ठेयानि, गुरुसेवा च करणीयेति ।

[ ७ ]

## ब्रह्म सत्यं जगन्मिथ्या

म० रामनाथदीक्षितः,

मैलापुर, मद्रास

दार्शनिकतत्त्वविचारे चत्वारो वादिनः प्रसिद्धाः—लौकायतिकाः, माध्यमिकाः, द्वैतिनः अद्वैतिनश्च । अद्वैतिनां मते ब्रह्मैव सत्यं जगन्मिथ्या चेति । मतमिदमनिर्वचनीयख्यातिमङ्गीकुर्वतामद्वैतिनामसाधारणं तत्त्वम् । ब्रह्मसत्यत्वमपि वस्तुतोऽद्वैतिनाम् असाधारणं मतम्, द्वैतिभिः त्रिविधपरिच्छेदरहितस्य ब्रह्मणोऽनङ्गीकारात् । निबन्धान्ते बहुभिः श्रुतिवचोभिः ब्रह्मणः सत्यत्वं जगतो मिथ्यात्वं च विस्तरेण प्रतिपादितम् ।

[ ८ ]

## प्रतिबिम्बतत्त्वबिम्बम्

पी० नारायणाचार्यः, रामानुजवेदान्तव्याख्याता,

वाराणसेयसंस्कृतविश्वविद्यालयः, वाराणसी

बिम्बातिरिक्तः प्रतिबिम्बो भवति न वेत्यत्र चिन्तितम् । प्रतिबिम्बस्य सत्यत्वं मिथ्यात्वं चाश्रित्य वादिनां यानि मतानि प्रचलितानि तान्यत्र संक्षेपतः समीक्षितानि । प्रतिबिम्बः कथमुदेति दर्पणे—इतीदं तत्त्वमपि विशदीकृतम् । भ्रमज्ञानस्वरूपमपि चिन्तितं समासेन । प्रतिबिम्बो बिम्बाद् भिन्नो सत्यश्च भवतीति सिद्धान्तितमत्र ।

[ ९ ]

## विशिष्टाद्वैतरामानन्दमतयोः साधर्म्यवैधर्म्यविचारः

पं० माधवाचार्यः

सिद्धार्थकालेज अव आर्टस एण्ड साइन्स, बम्बई

तत्त्वत्रयवादिनोः रामानुज-रामानन्दयोर्मतयोः सन्ति केचन भेदाः, ये इह सप्रमाणं निरूपिताः । तत्रादौ वेदप्रामाण्यम्, ततश्च उपनिषदादिस्वरूपविचारः द्वैताद्वैतादिदृष्टयश्चोपवर्णिताः । ततश्च तत्त्वत्रयस्वरूपं विवृतम् । नारायण-काल-राम-प्रकृति-अवतारादीनां स्वरूपं च विवेचितम् । अन्ते च रामानुजमतेन सह रामानन्दमतस्य समीक्षा कृता; समीक्षेयमन्यत्रापि क्वचिद् दृश्यते इति ।

[ १० ]

## सृष्टिरचनामीमांसा

श्रीनारायणदत्तमिश्रः,

टमका, पंडितटोला, दरभंगा

सांख्ये, तन्त्रशास्त्रे गीतायां वेदान्ते च याः सृष्टिप्रक्रिया बहुधोपवर्णिताः ता इह समासतो विवृताः । सृष्टिविवरणप्रसङ्गे पञ्चीकरणप्रक्रिया, अन्नमयादिकोषपरिचयः, अधिष्ठातृदेवतास्वरूपम् जडचेतनसम्बन्धः, विभिन्नशास्त्रदृष्ट्या पुरुषप्रकृत्यादीनां स्वरूपविवेचनम्—इत्यादयो विषया अपि विशदीकृताः ।

[ ११ ]

## पातञ्जलयोगे चित्तविचारः पाश्चात्यमनोविज्ञानं च

डॉ० चिन्तामणि त्र्यम्बक केंधे एम० ए०, पी एच्० डी०,
विद्यापीठानुदानाद्योगवृत्तिभाक्
प्रगतसंशोधनार्थी, भाण्डारकरप्राच्यविद्यासंशोधनमन्दिरम्, पूना

योगशास्त्रे क्षिप्तं मूढं विक्षिप्तमेकाग्रं निरुद्धं चेति पञ्चावस्थं यच्चित्तमुक्तं तत्र क्षिप्तावस्थम्, मूढावस्थमंशतश्च विक्षिप्तावस्थं चित्तं पाश्चात्यमनोविज्ञानेन चिन्तितम्। योगशास्त्रेण त्वेता भूमयो योगपक्षे न वर्त्तन्त इति प्रायश उपेक्षिता एव। एकाग्रे निरुद्धे च चेतसि चित्तशक्तीनां यो विकासो भवति स एव प्राधान्येन योगशास्त्रस्य विषयः। तस्माद् योगशास्त्रं पाश्चात्यमनोविज्ञानं च परस्परं पूरके।

पाश्चात्यमनोविज्ञानेऽज्ञानचित्तं ( Unconscious mind ) नाम फ्राइडमहाभागस्य महान् शोध इति मन्यते। परं व्यासभाष्ये स्पष्टमेवोक्ताः सप्तापरिज्ञाताश्चित्तधर्माः। एतेषां विचारः पाश्चात्यगहनमनोविज्ञानस्या (Depth Psychology) पि प्रगतये नितरामुपयुक्तः स्यात्। एकाग्रनिरुद्धयोश्चित्तभूम्योः प्रज्ञालोकस्य, भूमिषु विनियोगस्य, विभूतीनां च यद्वर्णनं वर्त्तते योगशास्त्रे तस्य प्रायोगिकं संशोधनम ( Experimental Research ) पि भृशमुपकुर्यान्मानवसमाजं संस्कृतनिरक्षणार्थम्।

[ १२ ]

## मन-प्राण-वाक् तत्त्व का रहस्य

पं० राधानाथ झा
दरभंगा

इस लेख में विभिन्न दृष्टियों से मन, प्राण और वाक् के लक्षण और कार्य व्याख्यात हुए हैं। इन तीनों का परस्पर सम्बन्ध एवं अन्योन्यप्रभाव पर भी संक्षेप से विचार किया गया है। आधुनिक जड़विज्ञान एवं मनोविज्ञान की मान्यताओं के साथ प्राचीन भारतीय मतों की आंशिक तुलना भी की गई है। प्रसंगतः जड़चेतनतत्त्व का विशदीकरण, शरीर और आत्मा का सम्बन्ध—ये दो गम्भीर विषय भी विवृत हुए हैं।

[ १३ ]

## विविध योगों का समन्वय

काकासाहेब कालेलकर,

'सन्निधि' राजघाट, नई दिल्ली—१

इस देश में जिस प्रकार पातञ्जलयोगदर्शन प्रचलित है, उसी प्रकार बौद्धयोग ( हीनयान-महायान भेद-सहित ) आदि भी प्राचीनकाल से ही प्रचलित रहे हैं। जैनों का भी योगमार्ग है। भक्तिसाधन आदि में भी योगाङ्गों की सत्ता दृष्ट होती है। वेदान्त में तथा सूफी आदि सम्प्रदायों में भी योग स्वीकृत हुआ है। इन सब योगों को एकत्र लाकर 'एक सार्वभौम और अनुभवसिद्ध योग पद्धति' का निर्माण कैसे किया जा सकता है, यह यहां दिखाया गया है। प्रत्येक मतों से सारांश लेकर, खण्डन-मण्डन की दृष्टि छोड़कर, दार्शनिक युक्तियों के आधार पर यह समन्वयप्रधान कार्य सम्भव है—ऐसा उदाहरण के साथ लेखक ने दिखाया है।

[ १४ ]

## कटु सत्य

स्वामी दिव्यानन्द सरस्वती,

सुरतगिरि बंगला, कनखल

यह सृष्टि जड़-चेतनमय है; इसमें ईश्वर और महामाया की सत्ता के अतिरिक्त और कुछ नहीं है। जीव के उत्कर्ष के लिये ही आध्यात्मिक साधनमार्ग उपदिष्ट हुआ है, यद्यपि नानाविध दूषित मनोवृत्तियों के कारण, साधनमार्ग कुछ न कुछ कलुषित हो गया है। परस्पर मतविभिन्नता के साथ मतविरोध एवं कटुता भी उत्पन्न हो गई है, जिससे आर्ष वैदिक ज्ञान का उत्कर्ष नष्टप्राय हो गया है। इस हेय स्थिति के दूरीकरण के लिए परस्पर द्वेषादि को छोड़कर समन्वयमूलक संगठन आवश्यक है। इस नवीन हिन्दूधर्म को 'युगधर्म' समझना चाहिए। इसके साथ आदर्श सात्त्विक जीवन को मर्यादित करना होगा। दलित जातियों का उत्थान करना एक आवश्यक लक्ष्य होना चाहिए।

[ १५ ]

## योग ( कुण्डलिनी योग )

स्वामी दिव्यानन्द सरस्वती

सूरतगिरि बंगला, कनखल

यह योग वह क्रिया है जिसके द्वारा जीव का योग शिव के साथ होता है। इस योग के साधक 'हंस' मन्त्र की सहायता से संयोजन-क्रिया का अभ्यास करते हैं। यह मन्त्र 'अजपा जप' है—अपने आप निरन्तर चलता रहता है। जप के तीन भेद हैं—वाचिक, उपांशु और मानस। इसी प्रकार वैखरी आदि तीन प्रकार के शब्द हैं, जिनकी जननी कुण्डलिनी शक्ति है। साधन के बल से सुप्त कुण्डलिनी जागरित होती है और ऊर्ध्वमुखी होकर छह चक्रों का भेदन करती हुई सुषुम्नामार्ग से परम शिव से संयुक्त हो जाती है। कुण्डलिनी-उत्थान की साधना वैराग्यादि के विना नहीं होती। यह योग सभी अवस्थाओं में स्थित लोगों के द्वारा यथाशक्ति अनुष्ठित हो सकता है। इस आत्मविद्यारूप योग की शिक्षा भारत के सभी विद्याकेन्द्रों में दी जानी चाहिए, तभी छात्रों में मेधाशक्ति की वृद्धि होगी, जिससे वे देश के अभ्युदय के लिये कार्य कर सकेंगे।

[ १६ ]

## दर्शनेषु निग्रहस्थानानां स्वरूपम्

श्रीसुखमयशर्मभट्टाचार्यः

शान्तिनिकेतनविश्वविद्यालयः

अत्र यथाक्रममिमे विषया विवेचिताः—निग्रहस्थानस्य प्रयोजनम्, निग्रहस्थानशब्दस्य निर्वचनम्, निग्रहस्थानस्य लक्षणम्, अस्य विभागश्च; प्रत्येकशो निग्रहस्थानानां लक्षणम्, वैशेषिकशास्त्रदृष्ट्या एतत्स्वरूपविचारः, चरकगतनिग्रहस्थानस्वरूपविचारः, निग्रहस्थानैः सह हेत्वाभासानां विचारः। बौद्धजैनाचार्यप्रोक्तनिग्रहस्थानविचारः, सर्वेषु मतेषु न्यायमतस्य श्रैष्ठ्यं चेति।

[ १७ ]

## विषयता, तस्या भेदविकासौ च

श्री सबलकिशोरः

माथुरचातुर्वेदविद्यालयः, मथुरा

विशेषेण सिनोति स्वात्मनेति विषयः वन्धनकर्तृवाचकः; स च रूढ्या रूपरसादीन् गुणान्, तांस्तान् देशान्, वस्तुमात्रमपि चाभिधत्ते। अयं घट इति ज्ञानम्, घटो मे स्यादितीच्छा, घटार्थः प्रयत्नो विचारो वा घटनिबन्धन एवेति वस्तुमात्रस्य ज्ञानादिविषयत्वं निष्प्रत्यूहं सिध्यति। ज्ञेयत्वं नाम ज्ञानीया विषयता। सा चेयं विषयता ज्ञानभेदेन भिद्यते; निर्विकल्पज्ञानीया तु निष्प्रभेदा सविकल्पज्ञानीया च प्रकारता, विशेष्यता संसर्गता चेति भेदत्रयीं भजते। विषयविषयिणोः पदार्थ-तद्बोधयोः स्वरूपसम्बन्धविशेष एव विषयतायाः स्वरूपम्। सा च प्रत्यक्षानुमितिप्रभृतिज्ञानभेदैरपि भिद्यते। संशयादिबुद्धिवृत्तिभेदेनापि सा भेत्तुं शक्यते। एतेषां भेदानां विस्तरेण निरूपणं कृतमत्र। अन्ते भ्रमज्ञानम्, तस्य निरासः, मोक्षरूपं ब्रह्म चेत्येते विषया अपि प्रतिपादिताः।

[ १८ ]

## ईश्वरसिद्धौ वित्तोकमतालोचनम्

पं० किशोरनाथझा, एम० ए०, पीएच० डी०

कामेश्वरसिंह दरभंगा सं० वि० वि०, दरभंगा

आसीद् वित्तोकाभिधः कश्चनाचार्यो धर्मकीर्त्युदयनयोर्मध्यवर्ती; ईश्वरमधिकृत्य तेन यदुक्तं तदिह प्रस्तुतम्। ज्ञानश्रीकृते ईश्वरसंक्षेपदूषणनाम्नि ग्रन्थेऽस्य मतमुद्धृतम्। रत्नकीर्तिकृतनिबन्धेऽप्यस्य मतं स्मृतम्। वित्तोकमतस्य प्रतिध्वनिः पश्चाद्भवे न्यायकुसुमाञ्जलौ श्रूयते। संक्षेपेणेहाचार्यस्य मतं प्रस्तूयते—यथा धूमदर्शनानन्तरम् इतरबाधसहकृतपक्षधर्मताबलेन इहैवास्ति वह्निरिति बोधो भवति अव्यापकमपि साध्याधिकरणमवगम्यते, तथा कार्यमात्रं सकर्तृकं भवति इत्यनुमानेन इतरबाधसहकृतपक्षधर्मताबलेन पुरुषविशेष ईश्वरः सिध्यतीति।

[ १९ ]

## प्रमात्वविमर्शः

पं० श्रीकृष्णवल्लभाचार्यः

जूनागढ़, सौराष्ट्र

प्रमां प्रमाणस्य स्वतस्त्वं परतस्त्वं चाधिकृत्य सर्वे दार्शनिकाः यानि मतानि प्रोचुस्तेषां सारसंग्रहोऽत्र कृतो लेखकेन। हेतुस्वरूपम्, हेत्वाभासाः, छलजातिनिग्रहस्थानानि सभेदानि च विस्तरेणोपवर्णितानि। अत्र नैयायिकानाम्, सांख्ययोगयोः, विशिष्टाद्वैतमतस्य, अद्वैत-द्वैतादि-वादिनाम्, हैरण्यगर्भाणाम्, पुराणेतिहासानाम्, आगमिकानाम्, आलंकारिकाणाम्, सौगतानाम्, जैनानाम्, शैवादिसंप्रदायानाम्, मीमांसकस्य, स्वामि-नारायणसंप्रदायस्य च दृष्टयः प्राधान्येनो-पवर्णिताः प्रामाण्यविषये।

[ २० ]

## सुवर्णस्य तैजसत्वम्

बलदेवझा

ने० रा० महाविद्यालयः, ज्ञानकूपम्, जनकपुरम्

सुवर्णं तैजसमिति न्यायवैशेषिकनयः। 'असति प्रतिबन्धके अत्यन्तानलसंयोगेऽपि अनुच्छिद्यमानजन्यद्रवत्वात्' इत्यनुमानेन तैजसत्वं साधयन्ति नैयायिकाः। अनुमानमिदमस्मिन् निबन्धे दृढीकृतम्, हेतुदोषाश्च निराकृताः।

[ २१ ]

## नयतत्त्वस्यानुपमेयता

विश्वनाथशास्त्री दातारः

साङ्गवेदविद्यालयः, रामघाट, वाराणसी

न्यायशास्त्रसूनुभूतं सर्वहितकारि नयशास्त्रमत्र विवृतम्; नीतिशास्त्रमित्यपरं नामास्य। नीतिं विना समाजः राष्ट्रं च न स्यातुं प्रभवेदित्यत्र न्यायेन प्रदर्शितम्। यदि सुनीतिस्थाने दुर्नयः स्यात्, तर्हि लोकयात्राहानिः स्यात् मर्यादाश्च विनश्येयुरिति उपपादितमत्र। सिद्धान्तितं च नीतीर्विना फलं नास्ति शास्त्रेणैकान्तिको नयः' इति।

[ २२ ]

## वाद-जल्प-वितण्डास्वरूपम्

चतुर्वेदी रामचन्द्राचार्यः

प्राध्यापकः, महाराजसंस्कृतमहाविद्यालयः, मैसूरः

निबन्धेऽस्मिन् इमे विषया मुख्यतया प्रतिपादिताः—कथालक्षणम्, वादादि-कथाविशेषाः, कथाधिकारिणः, कथाविभागफलम्, वादलक्षणम्, वादाधिकारी, जल्पलक्षणम्, जल्पाधिकारी, वितण्डालक्षणम्, वितण्डाधिकारी, वादादीनां मिथोवैलक्षण्यम्, वादप्रवृत्तिप्रकारः, वितण्डाजल्पप्रवृत्तिप्रकारः, वादादीनां पर्यवसानम्, प्राश्निकलक्षणानि च । निबन्धे न्यायसूत्रं मध्वाचार्यकृत-कथालक्षणं चाश्रित्य विचारः प्रदर्शितः ।

[ २३ ]

## न्यायविशिष्टाद्वैतमतयोः प्रमाणविचारः

डा० वे० वरदाचार्यः

वेङ्कटेश्वरविश्वविद्यालयः, तिरुपतिः

वेदप्रतिपादितात्मादिपदार्थज्ञानाय न्यायशास्त्रोक्तप्रमाणतत्त्वज्ञानमावश्यकमिति निश्चप्रचम् । विशिष्टाद्वैतसिद्धान्ते गौतमीयन्यायं परिष्कृत्य सिद्धान्तानुगुणं न्यायशास्त्रं भगवन्नाथमुनिप्रभृतिभिराचार्यैः प्रवर्तितम् । नाथमुनिप्रणीतो ग्रन्थो नष्टः । रामानुजाचार्याणां शिष्यपरम्परासु विद्यमानैः बहुभिराचार्यैः न्यायग्रन्थाः प्रणीताः । विशिष्टाद्वैतवादिनो वदन्ति यद् गौतमीयशास्त्रे यत् प्रतिपादितं तद् यदि युक्तिसहं भवति तर्हि उपादीयते तत् । इतः परं निबन्धलेखकेन प्रत्यक्षादिप्रमाणानां लक्षणानि न्यायतन्त्र-विशिष्टाद्वैत-शास्त्रप्रोक्तानि विवेचितानि; अर्थापत्त्यादीनां प्रमाणानां न्यायतन्त्रे पृथक् प्रमाणत्वेन अस्वीकृतानामपि स्वरूपं विवेचितम्, तद्विषये विशिष्टाद्वैताचार्याणां मतानि अपि विशदीकृतानि ।

[ २४ ]

## न्यायवैशेषिकसिद्धान्तपरीक्षा

श्री आचार्य ये-शेस-थुब-तन,

अध्यापक, तिब्बती उच्च संस्थान, सारनाथ

प्रस्तुत निबन्ध में निम्नलिखित विषयों पर चर्चा की गयी है—(१) वैशेषिकों के षट् पदार्थ; (२) द्रव्यों में नित्यद्रव्य अनित्यद्रव्यों का अन्तर; (३) अवयव्याश्रित द्रव्यों

का परिमाण; (४) सर्वत्रग और असर्वत्रग द्रव्य; (५) गुणों के भेद और उनके लक्षण; (६) घट-पट आदि के साथ गुणों का सम्बन्ध; (७) आत्म-साधन युक्तियां; (८) आत्मा के द्वारा मोक्षप्राप्ति के नियम; (९) वैशेषिकसंमत आकाश का शब्दाश्रयत्व नियम। (१०) न्यायवैशषिकों के उक्त सिद्धान्तों का आचार्य दिङ्नाग द्वारा खण्डन।

[ २५ ]

## प्रमाण-मीमांसा ( जयन्तभट्टमतानुसार )

**डा० बद्रीनाथ सिंह**

**प्राध्यापक, भारतीय दर्शन तथा धर्म विभाग, भारती महाविद्यालय, बो० एच० यू०, वाराणसी**

न्याय-दर्शन में प्रमाण प्रधानभूत विषय है। इसी कारण न्यायदर्शन का दूसरा नाम प्रमाण-शास्त्र भी है तथा नैयायिकों को 'प्रमाणपटवः' की संज्ञा भी दी गयी है। उदयनाचार्य ने 'प्रमाणं शिवः' इत्यादि से प्रमाण की उपमा ईश्वर से दे दी है। प्रमाणादि पदार्थों के ज्ञान से ही मोक्षकी प्राप्ति सम्भव है—प्रमाणाधीनं तत्त्वज्ञानान्निःश्रेयसाधिगमः। समस्त चराचर विश्वकी व्यवस्था ही प्रमाणाधीन है।

नैयायिकों के अनुसार प्रमाण शब्द करण अर्थ का अभिधान करता है। इस यौगिक समाख्या निवर्चन के आधार पर चक्षुरादि इन्द्रियों को प्रमाण माना गया है। परन्तु चक्षुरादि इन्द्रियों को प्रमाण मानने में नैयायिकों का तात्पर्य है कि प्रमाणता कारण-कूट में रहती है न कि किसी एक कारण में। अतः चाक्षुष प्रत्यक्ष ज्ञान में चक्षु ही प्रमाण नहीं अपितु महत्त्वावच्छिन्न उद्भूतरूपावच्छिन्न आलोकसंयोगावच्छिन्न चक्षुसंयोगावच्छिन्न चक्षु को ही करण माना गया है। अतः करण कारण-कूट है। इसी कारण-कूट का जरन्नैयायिक श्री जयन्तभट्ट सामग्री के रूप में उल्लेख करते हैं। सामग्री का स्वरूप कहीं तो बोधस्वरूप है और कहीं अबोधस्वरूप। अतः बोधाबोधस्वरूप सामग्री ही प्रमाण है। बौद्धदार्शनिक तथा मीमांसक प्रमाण को केवल बोधस्वरूप ही मानते है। अतः जयन्त भट्ट इन मतों का खंडन कर न्याय-मत का मंडन करते है।

[ २६ ]

# निब्बानस्स दिट्ठधम्मता

डा० महेश तिवारी,

नवनालन्दामहाविहार, नालन्दा, पटना

सोगतसासने सम्मापटिपन्नानं अरियपुग्गलानं परमो लाभो निब्बानस्स अधिगमो ति वुच्चति। निब्बानत्थाय कुलपुत्ता सम्मदेव आगारस्मा अनागारियं पब्बजन्ति, पब्बजित्वा च सम्मापटिपत्तिं सेवन्त ब्रह्मचरियावसाने निब्बानं सच्छिकत्वा दुक्खेन अमिस्सं परमं सुखं अनुभवन्ति।

निरुत्तत्थतो पन निब्बानं तण्हाय निरोधो। तण्हाभिभूता मनुस्सा कुसलाकुसलं कम्मं कत्वा अब्याकतं संखारं अभिसंखरित्वा भवतो भवं संसरन्ति। तेन अयं पोनोब्भविका ति वुच्चति। इमाय तण्हाय असेसनिरोधो येव निब्बानं।

निब्बानं दुविधं—सउपादिसेसनिब्बानं, अनुपादिसेसनिब्बानं च। उपादी ति पञ्च-क्खन्धा। तेन सउपादिसेसेन विज्जमानं निब्बानं सउपादिसेसं। तस्मिं समये पञ्चक्खन्धा निहततक्कर-तक्करगाममिव सब्बमलविरहितं परमपरिसुद्धभावेन विज्जन्ति। तेहि सह विज्ज-मानेन विजाननलक्खणसम्पन्नेन परिसुद्धविञ्ञाणेन 'निब्बानं परमं सुखं' ति योगावचरो जानाति। इदं हि निब्बानं दिट्ठधम्मवेदनीयं।

अनुपादिसेसनिब्बाने तु पञ्चक्खन्धा निरुज्झन्ति। तस्मा येन हेतुना विजाननकिच्चं होति तस्स निरोधेन साधनविपत्ति आपज्जति। सो सत्तो निब्बुतग्गिक्खन्धोव निब्बुतो ति कथितुं सक्कोम, सो कुहिं गतो, कं दसं पत्तो ति निब्बचनं नत्थि। अपि च अत्थि एसा निब्बानधातु भावरूपा ति। यं निस्साय कथितं—

अयोघनहतस्सेव जलतो जातवेदस्स।
अनुपुब्बुपसन्तस्स यथा न जायते गति।
एवं सम्मा विमुत्तानं कामबन्धोघतारिणं,
पञ्ञापेतुं गति नत्थि पत्तानं अचलं सुखं॥

[ २७ ]

## बौद्धनैरात्म्यवादस्य मूलं स्वरूपम्

श्रीकरुणेशशुक्लः,
संस्कृतविभागः, गोरखपुरविश्वविद्यालयः

अत्रादौ बौद्धनैरात्म्यवादस्य मूलं स्वरूपं चिन्तितम्, सिद्धान्तितं च यद् अहंभावविनिवर्तने आत्मदृष्टिपरिवर्जने एवायासो बुद्धस्य लक्ष्यते, न तु आत्मास्तित्वप्रतिषेधे। महायानसंमत-नैरात्म्यसिद्धान्तः स्पष्टं दर्शितः; अहंकारममकार–आत्मात्मीयदृष्टि–सत्कायदृष्टिनिवर्तनपरमेव पुद्गलनैरात्म्यं धर्माणामनुत्पादनिःस्वभावशून्यताव्याख्यानपरमेव धर्मनैरात्म्यमुपवर्ण्यते अस्मिन् मते। विस्तरेण नागार्जुनकृतं नैरात्म्यव्याख्यानम्, असङ्गादिसंमता दृष्टयश्चापि समासतो वर्णिताः।

[ २८ ]

## क्षणिकविज्ञानवादो ब्रह्माद्वैतवादश्च

स्वामिब्रह्मानन्दः, अनुसन्धानप्राध्यापकः,
नवनालन्दामहाविहारः नालन्दा

अस्मिन्निबन्धे क्षणिकविज्ञानवादनिराकरणपूर्वकं ब्रह्माद्वैतवादस्य प्रतिष्ठापनं कृतम्। तत्र प्रथमं सौगतसम्प्रदायान्तर्गतसौत्रान्तिकादिभेदानां परिचयो दत्तः। ततः क्षणिक-विज्ञानवादसिद्धान्तः सयुक्तिकः शून्यवादनिराकरणपूर्वक उपन्यस्तः। तदुत्तरं क्षणिकविज्ञान-वादिब्रह्माद्वैतवादिनोः परस्परसामीप्यानुभवः सप्रमाणक उक्तः। ततः क्षणिकविज्ञानवाद-सिद्धान्तनिराकरणपूर्वकं ब्रह्माद्वैतवादसमर्थनं कृतम्।

[ २९ ]

## प्रज्ञाप्रपत्ति में आर्यसत्यों का अवदान

छिमेद् रिगजिन लामा,
विश्वभारती विश्वविद्यालय, शान्तिनिकेतन ( प० बं० )

गुरुसेवा से वह ज्ञान मिलता है जिससे भव, कर्म और धर्म से मुक्ति मिलती है। दुःखमय संसार से मुक्ति पाने के लिए चेष्टा करनी चाहिए; केवल अपनी मुक्ति नहीं, बल्कि

अन्य भी मुक्त हो जाँय, इसके लिए चेष्टा करनी चाहिए। इसके लिए परम बोधि चित्त को अपने में उत्पन्न करना चाहिए; साथ ही विभिन्न पारमिताओं के अभ्यास से 'द्विविध काय' का अधिगम करना आवश्यक है। क्लेश का कारण अविद्या है। अनात्मग्रह से इस अविद्या का नाश होता है। इसके लिये समाधि तथा समाधि के लिये शील आदि अभ्यसनीय हैं।

[ ३० ]

## तथागत का स्वरूप

**डॉ० लालमणिजोशी,**

**गोरखपुर विश्वविद्यालय**

शाक्यमुनि बुद्ध एक ऐतिहासिक महापुरुष थे। उन्हें तथागत कहने का ऐतिहासिक महत्त्व है। जिस प्रकार उनके पूर्ववर्ती बुद्ध भूतकोटि तक आये थे उसी प्रकार शाक्यबुद्ध भी आये थे अतः तथागत कहलाये। यह 'भूतकोटि' अथवा 'धर्म' कालातीत और लोकातीत होने से अनभिलाप्य, अतर्कावचर और प्रत्यात्मवेदनीय है। इस दृष्टि से बुद्धों की न अवक्रान्ति होती है और न महापरिनिर्वाण, अतः तथागत न कहीं जाता है और न कहीं से आता है। बुद्ध, धर्म, प्रतीत्यसमुत्पाद, निर्वाण, धर्मकाय, ब्रह्मकाय, परमार्थ, तथता, धर्मता, शून्यता, निःस्वभावता, प्रज्ञापारमिता, सर्वज्ञता, अमृत, ब्रह्मभूत, प्रमाणभूत, शीतीभूत, अद्वयज्ञान, वज्रसत्त्व, प्रज्ञोपाय, निर्विकल्प, स्वलक्षण, तत्त्व और तथागत ये सभी पर्याय हैं। तथागत शब्द से अभिप्रेत होनेवाला परमार्थ कल्पनापोढ और प्रपञ्चसमतिक्रान्त है। प्रस्तुत निबन्ध में उक्त विषय पर पालि-संस्कृत बौद्ध ग्रन्थों से महत्त्वपूर्ण सूचना संकलित की गई है। अतएव यह निबन्ध सूचनाप्रधान है। यह सुझाव रखा गया है कि 'तथागत' ह्रास और विकास का विषय नहीं है, अतएव आचार्य नागार्जुन, प्रज्ञापारमितासूत्र, आचार्य दिङ्नाग तथा अद्वयवज्राचार्य में उपलब्ध तथागत का स्वरूप प्राचीनतम पालि सूत्रों में निर्दिष्ट स्वरूप से अभिन्न है। सूचनाप्रधान होने के अतिरिक्त यह निबन्ध पालि एवं संस्कृत बौद्ध आगमों का तथागत के स्वरूप के विषय में तुलनात्मक समीक्षा करता है। इसमें प्रचुर सामग्री मूल पालि व संस्कृत से उद्धृत की गयी है।

[ ३१ ]

## सर्वज्ञताप्रापक बोधिपथ-हीन पुरुष का आशय

आचार्य सोङ्-रिन पो-छे, प्राध्यापक, तिब्बती उच्चशिक्षा संस्थान,

तिब्बती विहार, सारनाथ, वाराणसी

प्रस्तुत निबन्ध में निम्नलिखित विषयों पर चर्चा की गई है—क्षणसम्पत्ति का महत्व और उसकी दुर्लभता, अनित्यता की भावन , आमुत्रिक सुख के साधनभूत त्रिशरणगमन, कार्य कारण की व्यवस्था, मध्य पुरुष का आशय, उसका संसार से उद्वेग होने का उपाय, मोक्ष प्राप्त करने के मार्ग का स्वरूप, अधिशिक्षात्रय का स्वरूप, अधिमात्र पुरुष का आशय और उसके बोधिचित्तोत्पाद और बोधिचर्या में शिक्षण करने की विधि, हेतुभूत पारमितायान और फलभूततन्त्रयान में शिक्षण करने की विधि।

[ ३२ ]

## द्विसत्य

आचार्य लामा रिन-छे, अध्यापक,

तिब्बती उच्चशिक्षा संस्थान, सारनाथ

प्रस्तुत निबन्ध में इन विषयों की चर्चा की गई है—द्विसत्य का लक्षण, द्विसत्य के भेद का आधार, द्विसत्य की व्युत्पत्ति, द्विसत्य की संख्या, द्विसत्यों की एकानेकत्व-परीक्षा, द्विसत्यों का प्रयोजन, द्विसत्यों के गम्भीर सूक्ष्मज्ञान से विपरीत कल्पना का निराकरण, द्विसत्यों के सूक्ष्मदर्शन का संक्षेप, द्विसत्यों में संगृहीत फलभूत द्विकार्यों की सिद्धि, कुशल मूल की परार्थ के लिए परिणामना।

[ ३३ ]

## भगवान् बुद्ध का परार्थ और स्वार्थसम्पत्तियां

आचार्य पल्ल्दन् शेस्-रब, अध्यापक,

तिब्बती शिक्षासंस्थान, सारनाथ

प्रस्तुत निबन्ध में निम्नलिखित विषयों पर चर्चा की गई है—

( १ ) सर्वाकारज्ञता का साक्षात्कार करने के बाद महाकरुणा के द्वारा विनेयजनों के समक्ष सन्मार्ग के उपदेश करने की विधि। ( २ ) प्रमाणपुरुष बुद्ध के द्वारा सम्पूर्ण सत्त्वो के

लिए स्वीकृत हिताशय का स्वरूप, कारण, आशयसम्पत्तियां। ( ३ ) महाकरुणा के आश्रय से उपायों में अभ्यस्त प्रयोगसम्पत्तियां। ( ४ ) उपाय के अपरप्रत्यय से नहीं, अपितु स्वज्ञान के बल से ही प्राप्त होने का नियम। ( ५ ) अभ्यास के साक्षात्कार के द्वारा सम्पूर्ण दुःखों से शान्ति प्राप्त करने के उपायों को बताने वाला ही सम्यक् शास्ता होता है। ( ६ ) परार्थ-चिन्तन से त्रिनय द्वारा अनुत्तर स्वार्थ-सम्पत्ति की प्राप्ति होती है। ( ७ ) ( ८ ) महा-कारुणिक शास्ता ने स्वयं जिस प्रकार सन्मार्ग का साक्षात्कार किया, उसी प्रकार दूसरों को अविपरीत रूप से दिखाया; भगवान् बुद्ध के परार्थसम्पन्न शास्तृत्व होने का प्रमाण।

[ ३४ ]

## स्याद्वादः

अमृतलालजैनः

जैनदर्शनविभागः, वा० सं० वि० वि०

भारतीयेषु दर्शनेषु समन्वयात्मकस्य जैनदर्शनस्य महत्त्वपूर्णं स्थानं वर्त्तते। इदं दर्शनं प्रथमतीर्थंकरस्य भगवत ऋषभदेवस्य समये प्रादुर्बभूव। तदा तल्लिपिबद्धं नासीदिति त्वन्या वार्त्ता। मानवानां स्मरणशक्तिस्तदा प्रबलाऽऽसीत्। कालप्रभावतस्तस्यां शनैःशनैर्दुर्बलायां सत्यामन्तिमतीर्थंकरस्य श्रीमहावीरस्य काले तदीयैर्गणधराभिधानैर्गौतमादिभिः शिष्यैस्तदुप-दिष्टं श्रुतं श्रावंश्रावं लिपिबद्धं कृतम्। तच्च स्याद्वादनयसंस्कृतत्वात् 'स्याद्वादश्रुतम्' इति संज्ञां लेभे। तदध्ययनेन ज्ञायते यत् परमाणुतो महास्कन्धं यावद् यावन्तो भावाः (पदार्थाः) सन्ति ते सर्वेऽपि नानाधर्माण एव। मानवीया दुर्बला दृष्टिर्द्रष्टुः कस्यचिदेकस्यापि पदार्थस्या-खिलान् धर्मानवगन्तुं न प्रभवति। ततस्तद्विषयेऽखिलानां दर्शकाणां पृथक्-पृथग् जायमानानु-भूतिः संभूयैव प्रामाण्यमश्नुते। नांशिकं ज्ञानं प्रमाणकोटिमाटीकते। जैनदर्शनस्य स्याद्वादसंज्ञः सिद्धान्तः समासत इदमेव प्रतिपादयति।

[ ३५ ]

## स्याद्वादः

दयाचन्द्रः साहित्याचार्यः,

गणेश दि० जैन संस्कृत डिग्री कालेज, सागर

जैनदर्शनभवनस्याधारशिलारूपेण प्रसिद्धोऽयं स्यादवादः विश्वशान्तिप्रदः, अहिंसा-धर्मप्रतिष्ठापकश्च। क्रमशो विवक्षितवस्तुगुणकथने वक्तुः तद्गुणपरिज्ञाने च श्रोतुः समीहित-

कार्यसिद्धये स्याद्वादपद्धतेरावश्यकता विद्यते । अनेन वादेन अनेकान्तसिद्धिः । अनेकान्तः = अनन्तशक्तिमान्यता, परस्परविरोधिधर्मद्वयस्य मान्यता वा । स्याद्वादः खलु सप्तभङ्गीनयः । वादोऽयं दर्शनानां समन्वयं विदधाति, पारस्परिकविवादस्य प्रतिक्रियायाश्च विनाशं करोति । सापेक्षस्य लोकस्य कृत्स्ना व्यवस्था अनेनैव वादेन भवितुमर्हति । न केवलं दर्शनेषु, वैज्ञानिक-लोकेऽपि स्याद्वाद आद्रियते । राष्ट्रियक्षेत्रे, लोकव्यवहारे च अनेनैव वादेन सामञ्जस्यं कर्तुं शक्यते इति ।

[ ३६ ]

## नानकदर्शने उदासो नाम संन्यासम्

**व्रजनाथ झा, अन्ताराष्ट्रियच्छात्राध्यापकः,**

**वाराणसेयसंस्कृतविश्वविद्यालयः, वाराणसी**

नानकचन्द्रोदयनाम्नो महाकाव्यानुसारमादिग्रन्थानुसारं च सिखशब्दस्यार्थः सार्थकता च, सिखशब्दस्य सिक्खशब्दस्य वा व्युत्पत्तिलभ्योऽर्थः, सिखधर्मस्योत्पत्तिर्विकासश्च, सिखस्योपासना उदासो नाम संन्यासः, सिखधर्मस्य बीजम्, उदासीनसम्प्रदायस्तस्य भेदाः विकासश्च, उदासिमतम्, तत्र ज्ञानसम्पादनमेव मुख्यं वस्तु तदर्थं मूलमन्त्रेणाजपाजपः, गृहस्थरूपे मूलमन्त्रसेवा वा, तदर्थं स्वात्मनः प्रकाश एव गुरुः, आत्मप्रकाशनाय शास्त्रं गुरु-गोविन्दश्च सेवनीयौ, तदर्थसाधना व्यर्था भवति, शैवमतेन वैष्णवमतेन वा साधना नैव योग्या अतः उदासिमतं सेवनीयम् । उदासिशब्दस्यार्थः—उदासिनां कर्तव्यम्···प्रथमं विश्वं नश्वरं भावयन् संन्यस्येज्जनः, ततो यतिरूपता, यतेः कर्त्तव्यानि, भिक्षां चरितुमनुशासनं यतीनां भेदाः षट्त्रिंमाः,शैवमतस्य भेदाः···वैष्णवमतस्य भेदाः,हठयोगस्य खण्डनम्, ज्ञानयोगभक्तियोगयो-र्वर्णनम्, तयोरभेदप्रतिपादनम्, देश्यैर्लिखितस्यादिग्रन्थस्य प्रचारायोपदेशः, पात्रेण येन केनापि पयःपानं हि तृप्तिदम् इति न्यायेन जनानां देश्यैरुदासिमतसेवनम्,मुमुक्षुणा तत्त्वज्ञानं मनोनाशो वासनाक्षयश्च सम्पादनीयाः । तदर्थं वैराग्यग्रहणम्, वासनाविचारः, मायाविचारः, तस्याः मुक्तिः, आर्यम्लेच्छयोरैक्यप्रतिपादनम्, जातिकुलं च विहाय ज्ञानयोगेन भक्त्या वा सगणस्य निर्गुणस्य वा साधनोपासना कर्तव्या ।

[ ३७ ]

## शाक्तदर्शन

**कालीचरणपन्त**

**जयपुर हाउस, तिलकपुर, अल्मोड़ा (उ० प्र०)**

अनेक उपनिषदों में, पुराणों में, शाक्ततन्त्रों में तथा परशुरामकल्पसूत्र आदि ग्रन्थों में 'शाक्तदर्शन' विवृत हुआ है। वेदादि के बाद यह विद्या दुरूह एवं लुप्तप्राय हो गई। गौडपाद, शङ्कराचार्य, नीलकण्ठ, भास्कराचार्य, लक्ष्मीधर, अभिनवगुप्त आदि ने इस दर्शन को पल्लवित किया। इसी दर्शन की परम्परा में सर्वानन्दठाकुर, रामप्रसादसेन. रामकृष्ण परमहंस आदि ने साधन किया। यह विद्या गोपनीय है; गुरुमुख से ही प्राप्य है। गुरुमुख से क्रिया का ज्ञान प्राप्त कर आसन, प्राणायाम तथा ग्रन्थिभेद के द्वारा कैवल्य की प्राप्ति की जाती है। ये सब कर्म मन्त्र के माध्यम से साध्य होते हैं। इस शास्त्र में तत्त्व एक ही है। वही ५१ वर्ण रूपों में भिन्न भिन्न रूपों में आकारित होकर ५१ प्रकार के तत्त्वों में परिणत होते हैं।

[ ३८ ]

## निर्गुणभक्ति के प्रवर्तक वारकरी सन्त नामदेव

**ले० विनयमोहन शर्मा**

महाराष्ट्र में वारकरी पन्थ अत्यधिक लोकमान्य है। इसके प्रवर्तकों में ज्ञानेश्वर, नामदेव, तुकाराम का नाम आदर के साथ लिया जाता है। पंढरपुर के विठोबा इस पन्थ के आराध्य देव हैं, जिनकी 'वारी' ( यात्रा ) आषाढ़ी और कार्तिकी एकादशी को की जाती है। वारी करने वालों को 'वारकरी' कहा जाता है। नामदेव के पूर्वज पंढरपुर के बिट्ठल ( विठोबा ) के वारकरी थे। नामदेव में बिट्ठल-भक्ति पिता से रिक्थ में प्राप्त हुई थी। यह पन्थ भी वैष्णव-सम्प्रदाय के अन्तर्गत लिया जाता है। नामदेव का जन्म ब्राह्मणी में सन् १२६० में विट्ठल-भक्त परिवार में हुआ था। अतः बचपन से ही इनमें बिठोबा की भक्ति जागरित हो गई थी। जब ये ज्ञानेश्वर के सम्पर्क में आये तो नाथपन्थी विसोबा खेचर से इन्होंने दीक्षा ली। निर्गुणी सन्त से दीक्षित होने पर भी इनकी बिट्ठलभक्ति क्षीण नहीं हुई। इतना ही अन्तर आया कि जहां वे पंढरपुर के मन्दिर में स्थित बिट्ठल की प्रतिभा की ही उपासना किया करते थे वहां उन्हें संसार के अणु-अणु में विट्ठल के दर्शन होने लगे।

ये 'ई भे विट्ठल, ऊ भे बिट्ठल, विट्ठल बिनु संसार नहीं' की अनुभूति से अभिभूत हो उठे। 'विट्ठल' इन्हें सगुण और निर्गुण दोनों रूपों में दृष्टिगोचर होने लगा। इन्होंने ज्ञानेश्वर के साथ उत्तर भारत की यात्रा की। मार्ग में कई चमत्कारी घटनाएं घटीं। जब ये दोनों सन्त उत्तर भारत की यात्रा से पंढरपुर लौटे तो संत ज्ञानेश्वर ने समाधि ले ली। परम-स्नेही मित्र के विछोह से पीड़ित हो इन्होंने पंढरपुर त्याग कर पुनः उत्तर भारत की यात्रा की और पंजाब के घोमान नामक स्थान में जीवन का अधिक समय व्यतीत किया और हिन्दी-पदों के द्वारा निर्गुण भक्ति का प्रचार किया। मराठी में इनके अभंग बहुत लोकप्रिय हैं। पंजाब में बहुत समय रहने के उपरान्त ये पुनः महाराष्ट्र लौट गए और विट्ठल की आराधना में लीन रहने लगे। ८० वर्ष की आयु में सन् १३५० में इन्होंने मन्दिर के महाद्वार पर समाधि ले ली।

नामदेव ने मराठी और हिन्दी में क्रमशः अभंग तथा पद रचना कर निर्गुण भक्ति का प्रचार किया। इनके गुरु नाथपन्थी थे। अतः सिद्धों की वाणी से इन्हें प्रेरणा मिली और इन्होंने अपने पदों में धार्मिक कट्टरता का घोर विरोध किया। जाति-पांति, व्रत, पूजा-पाठ, तीर्थ-यात्रा आदि की व्यर्थता पर बल दिया। ये साधक के लिये 'गुरु दीक्षा, आवश्यक मानते हैं।

नामदेव की वाणी का अध्ययन करने से स्पष्ट हो जाता है कि भाव, भाषा और जीवन-दर्शन में कबीर ने इनसे बहुत कुछ ग्रहण किया है। इस ऋण को स्वयं कबीर ने स्वीकार किया है। कबीर में जो योग की विविध क्रियाओं का उल्लेख है, वह नामदेव के पदों में भी विद्यमान है। वे भी कुंडली जागरित कर षट-चक्रों को वेधकर सहस्रार में प्राण चढ़ाकर अनहद नाद सुनते और सुन्न-समाधि लगा परम ब्रह्म-ज्योति का साक्षात्कार करते हैं। उनमें भी मधुर भाव से "पिउ" को पाने की तालाबेली पाई जाती है। नामदेव के पश्चात् आविर्भूत होने वाले निर्गुणी सन्तों में इन्हीं भावों की प्रतिध्वनि सुनाई पड़ती है। अतः हम इसी निष्कर्ष पर पहुंचते हैं कि कबीर को नहीं नामदेव को उत्तर भारत में निर्गुण मत का प्रथम प्रचारक मानना चाहिए।

[ ३६ ]

## स्वामिनारायणस्य जीवनं मतं च

प्रो० रमेश म० दवे, बम्बई

आंग्लभाषामयेऽस्मिन् निबन्धे आदौ स्वामिनारायणस्य जीवनं विस्तरेणोक्तम्। १७८१ खीष्टाब्दे अस्य महापुरुषस्य जनिरभूत्, देहत्यागश्च १८३० खीष्टाब्दे।

रामानुजसंमतं विशिष्टाद्वैतमतमेवानेन स्वामिनाऽभ्युपगतम् । जीवः, ईश्वरः, माया, अक्षरः, पुरुषोत्तमश्चेत्येते पञ्च पदार्था नित्या एतन्मते ! ऐकान्तिकधर्मेण मोक्षो भवति; स धर्मश्च ज्ञानवैराग्यादिभिः साध्यः । अस्मिन् ऐकान्तिकमार्गे सर्वे मार्गा अन्तर्गता इत्यपि आचार्यो मन्यते । देहत्रयातीताक्षरब्रह्म अहम् इति ज्ञानाभ्यासेन सर्वैः पुरुषोत्तमः सेव्य इत्येव दर्शनस्यास्य सारः ।

[ ४० ]

## गोरक्षशतकम्

श्री मधुसूदनप्रसाद मिश्रः,

सोमेश्वरनाथ संचालकमण्डलानुसन्धानविभागः अरेराज, चम्पारन

गोरक्षनाथकृतोऽयं ग्रन्थोऽमुद्रितः । ग्रन्थेऽस्मिन् ३५ तम श्लोकमारभ्य १०२ तम श्लोकपर्यन्तोंऽशोऽस्ति । योगविद्याऽत्र प्रतिपादिता । अत्र इमे विषया मुख्यत उपवर्णिताः—नागादयो वायवः, पञ्च प्राणाः, हंसमन्त्रजपरूपा अजपा गायत्री, कुण्डलिनी, आसन-प्राणायामौ, मुद्राणामभ्यासः, बन्धाभ्यासः, नाडीशोधनम्, प्रत्याहारधारणाध्यानसमाधयश्च ।

[ ४१ ]

## धर्मसंस्था के प्रस्थान

डा० इन्द्रचन्द्रशास्त्री,

स्नातकोत्तराध्ययनसंस्थान, दिल्लीविश्वविद्यालय, दिल्ली

प्रधानतः अभ्युदय और निःश्रेयस को लेकर यथाक्रम ब्राह्मण और श्रमण परम्परा प्रवर्तित हुई । आगे चलकर दोनों धाराओं में आदान-प्रदान हुआ । इस आदान-प्रदान से उभयत्र नवीन विकास का उदय हुआ और एक समन्वित परम्परा का प्रवर्तक यह नूतन परिणाम नौ भागों में विभाजित है—(१) श्रद्धा—वैष्णवपरम्पराओं के केन्द्र के रूप में; (२) (३) (४) ऋत, धर्म और यज्ञ—प्रवृत्तिमार्गी वैदिक परम्परा के केन्द्र के रूप में; (५) तप—शैव और निवृत्तिलक्ष्य परम्पराओं के केन्द्र के रूप में; (६) अद्वैत—अभेद लक्ष्य ज्ञानमार्ग के केन्द्र के रूप में; (७) शून्यता—भेदलक्ष्य ज्ञानमार्ग के केन्द्र के रूप में, (८) समता—एकता की व्यावहारिक भूमिका के रूप में; (९) स्वच्छन्दता—बाह्य मर्यादाओं की प्रतिक्रिया के रूप में ।

[ ४२ ]

## कबीर का समाजदर्शन

सुश्री रेणुका सिंह
अस्सी, वाराणसी

निबन्ध में निम्नलिखित शीर्षकों के अन्तर्गत विचार किया गया है।

( १ ) कबीरकालीन राजनैतिक, धार्मिक एवं सामाजिक परिस्थितियों का संक्षेप में उल्लेख।

( २ ) सामाजिक दर्शन की विशिष्ट एवं संक्षिप्त व्याख्या और अंग्रेजी के 'आउट लुक' के पर्याय रूप में प्रयोग।

( ३ ) कबीर के उपदेशों एवं उनकी प्रेममूलक भक्ति के माध्यम से निःसृत उनका सामाजिकदर्शन।

( ४ ) कबीर का सामाजिक दर्शन तत्कालीन धार्मिक आन्दोलन के मध्य कैसे विकसित हुआ। इसकी संक्षेप में व्याख्या।

( ५ ) निष्कर्ष।

[ ४३ ]

## ज्ञानेश्वर का तत्त्वज्ञान और शैवदर्शन

प० एन० एच० चन्द्रशेखर स्वामी
अनुसन्धाता योगतन्त्र-विभाग, वाराणसेय सं० वि० वि० वाराणसी

महाराष्ट्र में दो प्रकार की नाथसम्प्रदाय की परम्परा है। मच्छेन्द्रनाथ, गोरखनाथ और निवृत्तिनाथ की परम्परा में ज्ञानेश्वर महाराज का आविर्भाव हुआ था। ज्ञानेश्वर महाराज ने अनेक ग्रन्थों की रचना की। उनमें से भगवद्गीता पर ज्ञानेश्वरी टीका और अमृतानुभव ये दो उनके विशिष्ट ग्रन्थ हैं। अमृतानुभव के आधार पर यहाँ उनके द्वारा प्रतिपादित तत्त्वज्ञान का विवेचन किया गया है।

महाराष्ट्र की परवर्ती सन्तपरम्परा पर ज्ञानेश्वर महाराज का अक्षुण्ण प्रभाव रहा है। इनके ग्रन्थों और सिद्धान्तों का अध्ययन शंकर और रामानुज आदि के सिद्धान्तों के साथ न कर शैवशाक्तागम दर्शन और योग के साथ किया जाना चाहिये। यहाँ यह बतलाने का प्रयत्न

